उक्तं हि—

"रूपादुत्तरकाले हि विनियोगप्रयोजने।
तस्मात्प्रागेव तत्क्लृप्तेर्भेदाभेदप्रतीक्षणम्" ॥

इति। न हि विनियोगादुत्तरकालं रूपनिरूपणं युक्तम्। अज्ञातस्वरूपस्य विनियोगाशक्तेः॥

यदा च मन्त्ररूपनिरपेक्षश्रुतिविनियुक्ते इषे त्वेत्यादौ स्वत एव वाक्यभेदधीः तदा किं वक्तव्यं मन्त्ररूपसापेक्षलिङ्गविनियोज्य इति। एवं वाक्यप्रकरणादेरपि परोक्तबलाबलबीजदूष-

---

अर्थैकत्वादेकं वाक्यमिति नयोक्तेत्यर्थः। रूपादिति। स्वरूपनिर्णयादुत्तरकाल इत्यर्थः। तत्क्लृप्तेः विनियोगप्रयोजननिर्णयात्प्रागेवेत्यर्थः। श्रुतिविनियुक्ते यजुषि भेदधीर्युक्ता। न तु लिङ्गविनियोज्ये प्रागेव भेदधीरित्यत आह—यदा चेति। एवमिति। यथा प्राहकैदमर्थ्यस्येत्याद्युक्तदिशा प्रकरणस्य विनियोजकसर्वप्रमाणसहायत्वेन तेन प्रथमावगतकरणीयान्वयस्येन्द्राग्नचादिवाक्यशेषतया यथाश्रुताम्नानाबाधेनाप्युपपत्त्या तत्र प्रकरणबाधाभावात् प्रकरणस्थानबलाबलबीजस्थलेप्याभिषेचनीयाङ्गत्वाबाधेनैवाधिकेष्टिपश्वाद्यङ्गत्वस्योक्तत्वेन तत्र प्रकरणप्राबल्येन सन्निधिबाधाभावात् यथासङ्ख्याम्नानादिस्थले त्वदुक्तबीजाभावाच्च समाख्यादौर्बल्यबीजं चायुक्तम्। वैदिकसमाख्यायामव्याप्तेः। तस्यापौरुषेयत्वेन साक्षाच्छ्रुतेरिव विनियोजकत्वसंभवादित्यादिरूपेणोह्यमित्यर्थः॥

णमूह्यम् । तस्माट्टीकोक्तमेव श्रुत्यादिलक्षणं बला-
बलबीजं च युक्तम् । [1]नान्यदिति ॥

प्राभाकरोक्तश्रुत्यादिबलाबलबीजभङ्गः ॥ ८३ ॥

इति श्रीब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना
विरचिते तर्कताण्डवे द्वितीयःपरिच्छेदः.
श्रीपूर्णप्रज्ञप्रियः प्रीयताम्.

---

परोक्तखण्डनस्योपयोगं वदन्नुपसंहरति—तस्मादिति । उक्त-
दिशा परोक्तस्य दोषग्रस्तत्वात् टीकोक्तस्य चानवद्यत्वादित्यर्थः ॥

प्राभाकरोक्तश्रुत्यादिबलाबलबीजभङ्गः ॥ ८३ ॥

इति श्रीमत्सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते तर्कताण्डवविवरणे
न्यायदीपे द्वितीयः परिच्छेदः. श्रीवेङ्कटेशः प्रीयताम्.
श्रीकृष्णार्पणमस्तु.

द्वितीयः परिच्छेदः शब्दखण्डः संपूर्णः.

---

[1] नत्व—नं. रा.